गुञ्जामात्रां वटीं कुर्याल्लवङ्गैः पञ्चभिः सह ।
क्षुधासागरनामाऽयं रसः सूर्येण निर्मितः ॥३००८॥

भै. र., र. सु., ध., नि. र., वै. र., चि र म., रसायनसं., वै. चि., अग्निमान्द्ये ।

टि०—आयुर्वेदविज्ञाने वृद्धिहरनाम्नैको रसोऽस्ति तत्र विषस्थाने जयपाल नियोज्य चित्रकभावनया निष्पादित एतावान्विशेषोऽस्ति जयपालयुक्तत्वेनाऽनिर्देश्यत्वात्त परस्परमन्तर्भाव. ।

" रस गन्धक टङ्कण व्योषवह्नी, वराटाम्पट्टनपञ्च हिङ्गुलगन्धम् ।
क्षुपासवंचूर्णस्य वेदाशभागा, पुनर्नीरनम्भीर षड्विंशदङ्कि ॥
सुतिन्तिडीक्षारतक्षारयुग्म, दरैर्नागवल्लीद्रवैर्भावनीयम् ।
वटीमुद्गमानप्रमाणा च देया, यथेष्टानुपानाश्च भुक्त क्षिपेति ॥
महाश्वासकासौ हरत्सर्वदाल, क्षुधासागर सागरीयाऽनलाभ ॥ "

इति क्षुधासागरनाम्ना रसामृते पाठ प्रकम्पितोऽस्ति, तत्र विषस्थाने क्षुपेतिपाठ लेखकप्रमादाद्योगपदवस्तुद्विवैचित्र्याद्वा सञात । हिङ्गुल-गन्धमिति च द्विरुक्त केनविचारेण कृतमिति बुद्धयारूढ न भवति सुतस मागमनाद्धिङ्गुलकथनस्य वैयर्थ्यम् । गन्धकस्य तु नामनिर्देशेनैव योगमा रम्भिकपादे एव समागमनात्तद्वैयर्थ्यमपि स्पष्टमेव । प्रमाणाऽधिक्यकृत्या तदस्तीत्यपि वक्तु न युज्यते प्रथमविन्यासे एव द्विगुणयोगस्य कथयितु सुशकत्वात् । तस्मादय योग उपरितनयोगे एवान्तर्भावनीय ।

**भाषा**—त्रिकटु, त्रिफला, पाचोंनमक, तीनोंक्षार, शुद्ध पारा और गन्धक १–१ भाग, शुद्ध वच्छनाग २ भाग लेकर वारीकचूर्णकर पारागन्धककी नीलवर्णकज्जलीमें मिलाय लौंगके क्वाथसे एकदिन मर्दनकर १–१ रत्तीकी गोलियें बनाकर रख छोडे । इनमेंसे १–१ गोलीकाचूर्णकर ५ लौंगोंके साथ लेनेसे यह मन्दाग्निको दूरकरताहै ॥ ७०९ ॥

## ७१० क्षेत्रपालरसः

हिङ्गुलञ्च विषं ताम्रं लौहं तालकटङ्कणम् ।
जीरमाहेयफेनञ्च सममागं विमर्दयेत् ॥ ३००९ ॥
यवार्द्धा घटिका कार्या पथ्यं दुग्धौदनं हितम् ।
लवणाऽम्भोविवर्ज्यञ्च दातव्यं भिषजां वरैः ॥३०१०॥
अग्निमान्द्यं गुरुं शोथं ग्रहणीमपि दुस्तराम् ।
ज्वरञ्च विषमं जीर्णं नाशयेन्नाऽत्र संशयः ॥ ३०११ ॥

भै र , र. च , शोथे ।

**भाषा**—शुद्धशिंगरिफ, वच्छनाग, सुहागा और अफीम, ताम्र, लोह और हरितालभस्म, सफेदजीरा सब समभागलेकर वारीकचूर्णकर पुनर्नवा अथवा मकोयकेरससे १–२ दिन मर्दन कर मूगवरावर गोलियें बनाकर रखछोडे । इनमेंसे १–१ गोली पुनर्नवादिकायप्रभृतिकेसाथ देनेसे शोथ, मन्दाग्नि, दुस्तरसङ्ग्रहणी, विषम और जीर्णज्वर इनसबको यह नष्टकरताहै । पथ्यमें दूध और चावलदेवे । नमक और जलका परित्यागकरे ॥७१०॥

## ७११ क्षेत्रीकरणरसः

प्रागुक्तं पातितं सूतं स्वेदितं सुमुखीकृतम् ।
कलांशं हेमजीर्णञ्च षड्गुणं जीर्णदानवम् ॥ ३०१२ ॥
रसमादाय मृद्गीयात्कृष्णधत्तूरनीरतः ।
आखुपर्णीरसैश्चैव नष्टपिष्टो भवेद्रसः ॥ ३०१३ ॥
त्रिफलोत्थरसैर्मर्द्यः सूतः कृष्णसुवर्णजैः ।
विंशतिश्च दिनान्येव कल्कं सोमानले क्षिपेत् ॥३०१४॥
अध ऊर्द्धं वलिं दद्याद्रसेन्द्राच्च चतुर्गुणम् ।
निरुद्ध्य सुदृढं यन्त्रं चुल्लीमधिनिवेशयेत् ॥ ३०१५ ॥
ज्वालयेत्क्रमशो वह्निमेकविंशद्दिनावधि ।
मृदुमध्योत्तमं प्राज्ञो वैश्वानरमतन्द्रितः ॥ ३०१६ ॥
ज्वालयित्वा स्वाङ्गशीतं यन्त्रमुत्तारयेत्ततः ।
निर्भिद्य यन्त्रं गृह्णीयाद्रसं सिन्दूरसन्निभम् ॥ ३०१७॥
एवं भस्मीकृतात्सूताद्ग्राह्यं पलचतुष्टयम् ।
ताप्यं लोहं विडङ्गञ्च शिलाजतु हरीतकी ॥ ३०१८ ॥
सर्वं सूतसमं ग्राह्यं प्रत्येकं मर्दयेत्ततः ।
खल्वमध्ये विनिक्षिप्य सर्वमेकात्मतां यथा ॥३०१९॥
व्रजेत्तथाऽथ मधुना घृतेनाऽथ प्रमर्दयेत् ।
एवं तन्मर्दितं सूतं मध्वाज्येन समन्वितम् ॥ ३०२० ॥
भक्षयेत्प्रातरुत्थाय वल्लं घुण्यमतन्द्रितः ।
शुक्रवृद्धिकरं पुष्टिवर्धनं वह्निदीपनम् ॥ ३०२१ ॥
गद्याणमात्रं स्वीकुर्याद्राजयक्ष्मविनाशनम् ।
प्रमेहं पाण्डुरोगञ्च कामलाञ्च हलीमकम् ॥ ३०२२ ॥
ग्रहणीमतिसारञ्च नाशयेन्नाऽत्र संशयः ।
वत्सरद्वययोगेन वलीपलितहा भवेत् ॥ ३०२३ ॥
सतताऽभ्यासयोगेन जीवेदाचन्द्रतारकम् ।
क्षेत्रीकरणनामाऽयं रसः परमसुन्दरः ॥ ३०२४ ॥
धारोष्णं सर्वदा पेयं गव्यं शर्करया युतम् ।
न कचिदधि भुञ्जीत तक्रञ्चापि विवर्जयेत् ॥३०२५॥
गोधूमयवशालयश्च मुद्गं मांसरसन्तथा ।
प्रायेण तिक्तमधुरकषायकटुकात्मकान् ॥ ३०२६ ॥
रसान्भुञ्जीत सततं लवणाम्लं विवर्जयेत् ।
ताम्बूलं सततं खादेत्कर्पूरादिसमन्वितम् ॥
इक्षवः पनसं रम्भाफलादीनि निषेधयेत् ॥ ३०२७ ॥

रसाल , रसायने ।

**भाषा**—नुभुक्षान्तसस्कारकियेहुए पारेमें षोडशांशसुवर्णका-ग्रासदेकर षड्गुणगन्धकजारणकर कालाधतूरा, मूषाकर्णी, त्रिफला और कालेधतूरेकेरसोंसे यथाक्रम ५–५ दिन मर्दनकर टिकिया बनाय सुखाकर पारेसे चतुर्गुणित शुद्धगन्धक नीचेऊपररख डमरू यन्त्रमें बन्दकर समस्तापर सुखासुखाकर वज्रमिट्टीसे ■ कपडमि-ट्टीकरके चूल्हेपररख २१ दिनतक मृदु, मध्य और खराग्नि देकर पाककरे । २२ वेंदिन लकडियोंको निकालले और यन्त्रको कोय-लोंपर रहनेदे । स्वाङ्गशीतलहोनेपर युक्तिसे यन्त्रको खोलकर ऊपरकेघडेमें लगीहुई सिन्दूरवर्णभस्मको निकालकर ४ पललेवे । फिर शुद्धसोनामाखी, लोहभस्म, विडङ्ग, शिलाजीत और हर्रे ४–४ पल लेकर वारीकचूर्णकर घी अथवा मधुसे २–३ दिन मर्दनकर कल्कबनाकर रखछोडे । इसमेंसे ३–३ रत्ती घी और मधुकेसाथ मिलाकर तत्तद्रोगहरानुपानकेसाथ प्रात काललेवे ।

एसे ६ मासे दवाके सेवनकरनेपर वल, वृषता, शुक्र, पुष्टि, अग्नि इनकानाश, राजयक्ष्म, प्रमेह, पाण्डु, कामला, हलीमक, ग्रहणी, अतिसार इनसवको यह नष्टकरताहै। दो वर्षतक लगातार सेवन करनेसे वलीपलित नष्टहोतेहैं। निरन्तर सेवनकरनेसे अत्यन्त दीर्घजीवी होताहै। शक्करमिलाहुआ धारोष्णदूध, गेंहू, जव, चावल, मूग, मांसरस, तिक्त, मधुर, कषाय और कटुरसका-सेवनकरे। लवण, खटाई, विशेषकर दही और तक्रका वर्जनकरे। कर्पूरादि सुगन्धद्रव्ययुक्तपान, ईख, कटहर और केला वगैरह फलोंका सेवनकरे ॥ ७११ ॥

## ७१२ ज्ञानाख्यागुटिका

चत्वारस्तुत्थसत्त्वस्य तावन्तः स्वर्णमाक्षिकात्।
शुद्धरौप्यस्य चत्वारो वल्लैको हेमचूर्णतः ॥ ३०२८ ॥
शुद्धोऽष्टादशसंस्कारैः पूर्वोक्तो यस्तु पारदः।
तस्य वल्ला नवत्रिंशद्विपञ्चाशच्च मीलिता॥३०२९॥
खल्वे प्रक्षिप्य सर्वं तन्मर्दयेद्दिनसप्तम्।
वरुणस्य च मूलानि श्रीखण्डं सूक्ष्मकारितम् ३०३०
मृद्वग्नौ स्वेदयेदेस्तद्दोलायन्त्रे दिनद्वयम्।
स्वेदयेद्गुटिकां कृत्वा क्रमात्पञ्चामृतेन च ॥ ३०३१ ॥
मध्वाज्यदधिदुग्धञ्च शर्करा चैव पञ्चमी।
अस्मिन्पञ्चामृते स्वेदं यावद्यामाष्टकं भवेत्॥३०३२॥
कान्तलोहमये पात्रे मधुपूर्णे गुटी क्षिपेत्।
तत्पात्रं वालुकापूर्णस्थालिकायाञ्च विन्यसेत् ३०३३
चुल्ल्यां स्थालीं समारोप्य वह्निर्यामाष्टकं भवेत्।
स्वेदनेऽयं विधिः कार्य. प्रत्येकेनाऽमृतेन च॥३०३४॥
नष्टे नष्टे मुहु. क्षेप्यं क्रमात्पञ्चामृतं सदा।
मधुयुक्तं क्रमेणैव पञ्चधा स्वेदयेच्च ताम्॥ ३०३५ ॥
तत्तद्रोगानुपानेन सर्वान्रोगान्नियच्छति।
त्रिकालज्ञानमाप्नोति नरः सततसेवनात् ॥ ३०३६ ॥

रसचि, रसायने।

टि०—यद्यप्यत्राऽष्टधातुभिरेव गुटी निर्मिता परन्त्वेतादृक्प्रक्रियया दिव्यज्ञानप्राप्तेरसम्भवप्रायत्वात्तुत्थमाक्षिकहेमरजताना वादोक्तप्रक्रियया सुधात्वमापाद्य योगो निष्पादनीय इति रहस्यम्। सुधाप्रकारस्तु अगस्त्य सम्प्रदायादिभिरवगन्तव्य इति।

भाषा—तुत्थ और सुवर्णमाक्षिकके सत्त्व, शुद्धचांदी ४-४ वाल, सुवर्णचूर्ण १ वाल ( ३ रत्ती ), अष्टदशसंस्कारकिया-हुआपारा ३९ वाल लेकर ■ दिनतक शुष्कमर्दनकर गोलीबनावे फिर वरुणकीजडकीछाल और सफेदचन्दनका पानीमें कल्कवनाय उसमें गोलीको रखदे। फिर चूल्हेपर मिट्टीकी कढाही रख उसमें दोमहुल वालू विछाकर कान्तलोहके पात्रको रख औषधपिण्डका दोलायन्त्रवनाय मधुमें मन्दाग्निमें ८ पहरतक स्वेदनकरे। मधु सूखने पर दूसरा डाला जाय। इसीतरह घी, दही, दूध और शक्करके शरवतमें स्वेदनकरे। स्वाङ्गशीतलहोनेपर विशुद्ध बनाकर रखछोड़े। इसमेंसे १-१ रत्ती तत्तद्रोगहरानुपानकेसाथदेनेसे समस्तरोगनिवृत्तहोतेहैं। निरन्तरसेवनकरनेसे त्रिकालज्ञान प्राप्तहोताहै ७१२

## ७१३ ज्ञानोदयरसः

कलावेदाङ्कचन्द्रांशैः सर्वांशसितया युतैः।
शक्राशनरजोजातीफलशुकैः सुसाधितः ॥ ३०३७ ॥
सेवितः सात्म्यतो ग्राही जलदोषापनोदनः।
वातश्लेष्मामयध्वंसी ज्वरातीसारनाशन. ॥ ३०३८ ॥
बृंहणैरनुपानैर्हि योजितः कामवृद्धिकृत्।
ज्ञानोदयो भवेदेष साधकानन्दसिद्धिदः ॥ ३०३९ ॥

नि र, वै र, र. कौ, रसायनस, र ल, र श, टो ज्वराऽतिसारे। र सि वाजीकरणे।

टि०—र ल, र श, टो, एषु ग्रन्थेषु "विजयाशक्तियोगिनिट मण्डनशम्भुभि। ज्ञानोदयो भवत्येष साधकानन्दसिद्धिद ॥ कलावेदाङ्कचन्द्राशै क्रमेण ममशर्कर। सेवित सात्म्यतो ग्राही कफवातापनोदन ॥" इति पाठो निर्दिष्टोऽस्ति, अत्र नग्मण्टनमधिकमस्ति भागाश्च चत्वार एव। अतोऽन्तिमभागस्य द्विरुक्ति करणीया पाठस्तु एक एव करणाय पूर्वस्ले गौरवात्मण्डनमलनेन शक्याऽधिक्याच्च। निघण्टुरत्नाकरटीकाया रजम शब्दस्य पर्यङ्काऽर्थकरण तु हास्यास्पदमेवाऽस्ति, रसराजलक्ष्मीरसपाठे रन स्थाने शक्तीति स्पष्टोक्तित्वात्। र सि ज्ञानोदयावटीतिनाम। तत्र पारदस्थाने द्विगुणदरद नियोजितम्, पाठस्त्वेकएव।

भाषा—धोयाहुआ गांजा अथवा भांग १६ भाग, शुद्ध गन्धक ४ भाग, जायफल ९ भाग, पारदभस्म अथवा चन्द्रोदय १ भाग लेकर वारीकचूर्णकर सबकी बरावर शक्करमिलाकर रख छोड़े। इसमेंसेप्रकृतिकेअनुसार १ माशेसे २ माशेतककी मात्रा उचितानुपानकेसाथ लेनेसे जलदोष, वायु और कफरोग, ज्वरातिसार, इनसवको यह नष्टकरताहै वाजीकर अनुपानोंकेसाथ लेनेसे यह कामवीवृद्धिको करताहै ॥ ७१३ ॥

अन्त. स्थितोऽस्ति वहिरस्ति रसस्वरूप,
सिद्धिप्रदोऽस्तु लयसर्गविसर्गभेदैः।
ऊष्माभिधाममजति सर्वजगन्निवासो,
हंसो हरिः सकलकृद्रसयोगशास्त्रे ॥

इत्यूष्मपर्यन्ता रसाः समाप्ताः



7562

**द्राविडादिप्रसिद्धा ये कुम्भजव्यासनिर्मिताः**
**योगास्सम्यगिह न्यस्ताः सर्वदेशहितेच्छया॥**

## १ अग्निकुमाररसः

विशुद्धपारदविषगन्धकटङ्कणदरदान्समभागान् किञ्चिदुष्णीकृतपक्वार्कपत्ररसेन यामद्वयं मर्दयित्वा चक्रीकृत्य मूषायां निक्षिप्य मुखबन्धनं विधाय वालुकायन्त्रे क्रमाग्निना यामचतुष्टयं विपाच्य स्वाङ्गशीतलं गृहीत्वाऽऽर्द्रकरसेनैकगुञ्जाप्रमिते सेविते सति सर्वज्वरनिवृत्तिर्भवति। सङ्ग्रहण्यतिसाराद्योऽपि नश्यन्ति। पथ्यं रोगाऽनुरूपम्। ( अगस्त्यप्रोक्तवैद्यकशास्त्रे )

टि०—अयं पाठो रत्नाकरौषधयोगे बसवराजीये च सिद्धाऽग्निकुमार नाम्ना गृहीतोऽस्ति परन्तु दरदराहित्यमस्ति। तत्कारण त्रुटितपाठाऽऽसादन प्रतिभाति। व्यासेऽपि अर्धनारीश्वरवटीतिनाम्ना योऽयं योगोऽस्ति तत्राऽपि दरदराहित्यम्, भावनायाञ्च निर्गुण्डीकारवल्ल्यौ गृहीते, लवणयन्त्रे पाक, नस्ये भक्षणे चेति द्विविध प्रयोगो दर्शित। अत्राऽपि सर्वासां भावनानामनुष्ठानं कृत्वा एक एव योगस्सम्पादितश्चेद्योगलाघव भविष्यति। वालुकालवणयन्त्रयोस्तु कामचार। वालुकालवणमिश्रणेनाऽपि पाकाऽनुष्ठाने क्षत्यभाव प्रत्युत द्वयोस्सयोगादग्निसयोगेन मूषास्थोड्डयनशीलवस्तुना सुतरां दृढमवरोधो भविष्यति, नस्ये भक्षणे चाऽप्यव्याहतवीर्ययोग इति विद्वद्भिरविस्मरणीयम्। विशेषसूचनम्—अनयोर्ग्रन्थयोर्द्राविड्लिपिभाषयोर्विद्यमानताऽस्ति तद्देशीयास्सद्ग्रन्था नामन्यलिप्या भाषाया च प्रकटने महापातक मन्यन्ते इत धारणा दद्यावधि महामहत्त्वयुक्तयोरप्यनयोर्न संस्कृताऽनुवादोऽभूत् तद्देशीयौषधनाम्नामतिवैचित्र्यात्सस्कृते यथार्थप्रतिशब्दप्रहाभावादस्माभिरपि पद्यं न प्रतिबद्धा योगा ईश्वराऽनुग्रहेण द्वितीयाऽऽवृत्तौ श्लोकरूपता यास्यन्तीति विद्वत्सु विनीता प्रार्थना गद्यरूपेष्वेषु यत्रयत्रौषधनामसु सन्देह आसीत्तत्तत्र यथाऽवस्थितान्येव तद्देशीयनामानि निहितानि यथा चेम्पुतहालवादीनि अत्रायुर्वेदोद्धारव्रतैर्विशुद्धान्त करणैर्विद्वद्भिषग्वर्यैस्साहाय्य दातव्य यतस्तत जात स्खलनमपि कृपया सूचनीय तद्द्वितीयावृत्तौ दूरीकरिष्यते।

## २ अग्निकुमाररसः ( स्वयमादिः )

शुद्धमयश्चूर्णं, अमलसारगन्धकं, टङ्कणं, दरदं, कान्तश्चेति प्रत्येकमर्द्धपलिकं कुमारीरसेन यामचतुष्टयं विमृद्य चूर्णयित्वा ताम्रसम्पुटे निक्षिप्य गाढातपे धूमरेखोद्गमनपर्यन्तं स्थापनीयम्। पुनर्द्वितीयदिने कुमारीरसेन यामचतुष्टयं मर्दयित्वा शुष्कीभूतं चूर्णितञ्च ताम्रसम्पुटितं विधायाऽऽतपे शोषणीयम्। सूक्ष्मतया धूमो निःसरति। पुनस्तृतीयदिनेऽप्येवं कृतश्चेत्प्रचण्डाऽऽतपसंयोगात्पक्वीभूय भस्मीभवति। गुञ्जाद्वयपरिमिते भस्मनि कलाद्वयं ( द्वादशरक्तिकं ) त्रिकटुकचूर्णं मेलयित्वा मधुना सह सेवितश्चेत् सन्निपातगुल्ममूर्च्छाकामलापाण्डुमेहादयो निवर्तन्ते। पथ्यं रोगानुरूपम्। कारवेल्लकशाकः सुतरां वर्ज्यः। अनुपानभेदात्सर्वेषु रोगेषूपयुज्यते॥ ( अगस्त्य० )

टि०—एवंविधेषु योगेष्विदानीन्तनैर्गोल्मेरण्डपत्रैस्संवेष्ट्य त्रिदिन धान्यराशौ स्थाप्यते। आतपनिधानसमयेऽपि वानारिपत्रैराच्छाद्यते इति विशेष सन्नतोऽस्ति यथा स्वयमग्निरसे मर्दनमातपनिधानञ्च एकस्मिन्नेव दिने समाप्यते। अत्र तु महर्षिणा त्रिदिनपर्यन्त मर्दनमातपशोषणञ्च कृतमस्ति भस्म तूभयथाऽपि सम्पत्स्यते, गुणवैलक्षण्यन्तु सन्दिग्धाऽनुष्ठानेन परीक्षणीयम्।

## ३ अग्निकुमाररसः ( स्वयमादिः )

शुद्धपारदः ३ पलः, गन्धकः २ पलः, कान्तसिन्दूरं ४ पलं, मनःशिला २ पला, दरदं २ पलं, अयोभस्म १ पलं गृहीत्वा कज्जलीकृत्य कुमारीरसेन १५ दिनपर्यन्तं मर्दयित्वा त्रिकटुकचूर्णमिश्रिताऽऽर्द्रकरसेनाऽर्द्धगुञ्जापरिमितमौषधं सेवितं सदग्निमान्द्यगुल्मोदावर्तपाण्डुज्वरश्वासकासक्षयथुप्रभृतिरोगान्नाशयति। आढकी, मुद्गाः, सूरणं, वृन्ताकं, शिग्रुशिम्बी, भिण्डिका, काकमाचीपत्रं, गोक्षीरं, गोघृतञ्च पथ्यम्। अम्लरसो धूमपानं स्त्रीसंसर्गश्च वर्जनीयः॥ (व्यासप्रोक्तवैद्यकशास्त्रे )

## ४ अग्निकुमाररसः ( वातादिः )

विशुद्धपारदरसकर्पूरदरदतालकानि समभागानि गन्धकञ्च द्विभागं गृहीत्वा चूर्णीकृत्य काचकूपिकायां निक्षिप्य वालुकायन्त्रे यामचतुष्टयं पक्त्वा स्वाङ्गशीतलं ग्राह्यम्। मधुमिश्रिताऽऽर्द्रकरसेन सहैकगुञ्जापरिमितः सर्वज्वरेषूपयोजनीयः॥ ( व्यास० )

## ५ अजीर्णमान्द्यवटी

सर्पदंष्ट्रा १ पलं, विडङ्गपारसीकाकृष्णजीरकरास्ना ( राष्ट्रक ) पिप्पलीमूलरसकर्पूरदरदगोरोचनकेशराणि प्रत्येकं सपादतोलकानि, मृगमदश्च पादतोलकमाहृत्य ताम्बूलीदलरसेन गर्दभीक्षीरेण चैकैकयामं मर्दयित्वा मुद्गप्रमाणां वटीं स्तन्येन दद्यात्। अनया सर्वे बालरोगा नश्यन्ति। बालस्य मातुः पथ्यक्रमः= उष्णोदकं, पुराणतण्डुलाः, मरीचमिश्रितसैन्धवचूर्णञ्चेति। ताम्बूलं पुंप्रसङ्गश्च वर्ज्यः॥ ( अगस्त्य० )

## ६ अण्डवातलेह्यम्

हिङ्गुपारदमनःशिलापिप्पलीगजपिप्पलीसैन्धवटङ्कणतालककटुरोहिणीकृष्णजीरकाणि प्रत्येकं पादतोलकानि, शुद्धं जयपालबीजञ्चैकपलं गृहीत्वाऽऽदौ जयपालबीजानि एकयामपर्यन्तं सम्यग्विमृद्य पूर्वोक्तौषधचूर्णे मेलयित्वाऽऽर्द्रकरसेन द्वियामपर्यन्तं सम्यङ्मर्दयित्वा मरिचप्रमाणा वटीः कुर्यात्। एकां वटीं गुडेन शर्करया वा निगिलेत्। अनेन वातपाण्डुगुल्मश्वयथुज्वरहृच्छूलमेहवातग्रन्थयो नश्यन्ति। महोदरव्याधिग्रस्तानामण्डवातस्य च दिनत्रयाऽभ्यन्तरे एकवारमौषधं देयम्। एवं पञ्चदशाऽऽवृत्या औषधे दत्ते पूर्वोक्तरोगा नश्यन्ति। (अगस्त्य० )

### ७ अमृतसञ्जीवनरसः

स्तन्यशुद्धशिलाकार्पूररससिन्दूरदरदसत्त्वार-(दालचिकना) विषाण्येतानि सुशुद्धानि समभागान्यार्द्रकनिर्गुण्डीकृष्णतुलसीरसैर्मधुना च प्रत्येकदिनं मर्दयित्वा रागवल्लीरसादि विहाय प्राचीनतालगुडे द्राक्षाफलमध्ये वा मुद्गप्रमाणमौषधं निधाय प्रत्येकं यामाऽनन्तरं देयम् । मात्राचतुष्टयादधिकमपि न देयम् । महासन्निपातादिदोषेषु निवृत्तेषु सत्सु पुनरेतदौषधं न प्रयोक्तव्यम् । उष्णमुद्गमधम्, गोधूमखण्डयूषश्च पथ्यं । एतच्च नीलमेहग्रन्थ्युपदंशपार्श्वशूलवृद्धणग्रन्थ्यादीन्नाशयति । मेहरोगिणा बालतरणभिण्डिके, औदुम्बरशालाटु, गोधूमखण्ड, सितोपला, शिशुशिम्बा, पटोलद्वय, शरहश्चिका, प्राचीनतण्डुलाश्च पथ्या । एतदौषधेन कस्यचिन्मुखपाको भवेत्तर्हि कृष्णजम्बूत्वक्कषायेण शोधनं कार्यम् ॥ (व्यास०)

### ८ अभ्रकशुक्ती ( कोडासुरीमात्रा )

नागरमरिचाऽऽमलकाकल्कुकटुरोहिणीसैन्धवटङ्कणशुद्धतालकदरदाऽऽरतिकर्पूरपिप्पलीहरीतकीचिभीतककृष्णजीरकचित्रकत्वग्व्याघ्रफलाऽमलसारगन्धकमनःशिलाविषपारदा एरण्डबीजमज्जा चेति प्रत्येकं पादतोलकं शुद्धजयपालबीजमर्धपलं गृहीत्वा रसगन्धकादिभिः कृत्वा कज्जलीं विधाय चान्य शोधिततदव्यचूर्णेन सहैकत्र कृत्वा भृङ्गराजरसेन यामद्वयं, जम्बीररसेन च यामत्रयं सम्यग्विमृद्य मरिचप्रमाणा वटी कुर्यात् । एका वटी सैन्धवयुतमरिचचूर्णेन सह प्रयुक्ता गुल्मरोगं नाशयति । एवं धत्तूरपत्ररसेन शीतज्वरं, नागरक्वाथेन शोणितज्वरं, घृतमिश्रितजातीफलचूर्णेन रक्ताऽतिसारं, बिल्वपत्ररसेन धातुह्रासं, गोघृतेन सद्ग्रहण्यतिसारादयं, निर्गुण्डीपत्ररसेन विदारिमेहं, मधुना राजयक्ष्मादयं, त्रिकटुचूर्णेन श्वासाधिपयक्ष्मकण्ठावरोधं, शिग्रुपत्ररसेन गुल्मशूलादयं, मेथिकायानकरसेन हृद्रुज्व्याधयं, भूम्यामलकचूर्णेनाऽतिदाहं, त्रिकटुचूर्णेन कामं आर्द्रकरसमिश्रितकर्कटत्वग्रसेन चित्तविभ्रमसन्निपातं, नवनीतमिश्रितत्र्यातिमतीराजजातीफलत्वक्चूर्णेनाऽतिमूत्रव्याधिर्नश्यति रक्तकार्पासपुष्परसेन वशीकरणं, ताम्बूलेन च स्त्रीवशीकरणं भवति । एवं तत्तद्रोगानुसारेणाऽनुपानादयं कल्प्या । (अगस्त्य०)

### ९ अयःसिन्दूरम् ( प्रथमम् )

अयश्चूर्णं, अमलसारगन्धकश्चैकैकपलं गृहीत्वा कन्याद्रवेण यामचतुष्टयं मर्दयित्वा चक्रिकां विधाय शरावसम्पुटितं कृत्वा पञ्चाशदुत्पलकैः पुटं देयं । पुनः कन्यारसेन मर्दयित्वा पूर्ववत्पुटं देयं । तत खल्वे निक्षिप्य पातभृङ्गस्वरसेन मर्दयित्वा पञ्चाशदुत्पलकैः पुटं देयं । एतदरुणादयःसिन्दूरं भवति । अर्धगुञ्जापरिमितं मधुना सेवनीयम् । कामलापाण्डुशोफादयो नश्यन्ति सिराश्च दृढा भवन्ति ॥ (व्यास)

### १० अयःसिन्दूरम् ( द्वितीयम् )

शुद्धमयश्चूर्णं ५ पल, पारदगन्धकश्चान्तानि प्रत्येकं पलानि, तालकं १ तोलक हंसपाददरदाऽर्द्धतोलकं, एतानि विचूर्ण्य विम्बीपत्ररसेन यामचतुष्टयं मर्दयित्वा चक्रिकां विधाय शरावसम्पुटितं कृत्वा शतोत्पलकैः पुटं देयं । पुनर्भृङ्गरसेनेभुरक (नीरगुन्दी) स्वरसेन च यामचतुष्टयं सम्मर्द्य पूर्ववत् पुटं देयं । पुनर्भृङ्गरसेनैका गजपुटं देयं । इदमौषधं चित्रकक्वाथेन दिनद्वयं मर्दयित्वा माषप्रमाणां वटीं कृत्वा रामठत्रिकटुककर्पूराणां समभागचूर्णाऽनुपानेन एका वटी दत्ता चेन्महासन्निपातश्वासकासक्षयमेहपाण्डुगुल्मादयो रोगा निवर्तन्ते । पथ्यादिकमत्र यथोचितं । (व्यास०)

### ११ अयःसिन्दूरम् ( तृतीयम् )

शुद्धाऽयश्चूर्णकान्तगन्धकान् २-२ पलान, पारदश्चैकपलं खल्वे निक्षिप्य जम्बीररसेन दिनद्वयं मर्दयित्वा शुष्कां चक्रिकां शरावसम्पुटेऽयस्कदयं शतोपलैः पुटं देयं । एवं रीत्या कुमारीरसेन चत्वारं पुटं देयं । एतत् सिन्दूरं भवति । गुञ्जाद्वयपरिमितस्य मधुना सह सयनादस्थिगतज्वरादयो नश्यन्ति । भृङ्गराजमूलचूर्णेन पित्तपाण्डुगुल्मादयं, त्रिकटुकल्केन गर्भशूलाऽऽजीर्णवाताव्याधयं, आर्द्रकचूर्णेन पान्ताऽम्लेऽग्निश्च नश्यति । मण्डलपर्यन्तं सेवनाच्छरीरं वज्रसमं भवति ॥ ( अगस्त्य० )

### १२ आनन्दभैरवरसः ( महदादि ) १

गौरीपाषाणदरदमनःशिलातालकटङ्कणविषगन्धकसत्त्वार ( दालचिकना ) मृतरसकृतादिपाषाणानि विधिना शुद्धानि काचभाण्डे मुखपर्यन्तं चान्यानां मृत्रमापूर्य उपरितनानां मृत्स्नं पूर्णं निक्षिप्य पञ्चमृत्तिका दत्वा हस्तत्रयपरिमिते भूगर्ते भाण्डं निधाय गर्तमापूर्य चत्वारिंशद्दिना युषस्य मुखमुद्रणमुद्घाट्यौषधं गृहीत्वा कुमारीरसेन दिनद्वयपर्यन्तमनारतं मर्दयित्वा चक्रीकृत्य शरावसम्पुटितं कृत्वा मृदा सन्धिनिरोध्य भूपुटं देयं ( अन्यं पुटं देयं )। पुनर्भौतदौषधं खल्वे निक्षिप्य शुद्धपारदं मयूरतुत्थभस्म चैकैकपलं शुक्तिभस्म (सफेदीभस्म) सपादभागं मिश्रयित्वा पानपुष्पपत्ररसेन यामद्वयं मर्दयित्वा माषमात्रा वटीश्छायाशुष्का कृत्वा नियतानि-

नेन मिश्रितानामष्टभागावशिष्टकाथेन यामचतुष्टय विमृद्य गुञ्जामिता वटी विधाय स्तन्येन मधुना वा बालेभ्यो दद्या । अनुपानविशेषे सोपद्रवास्सन्निपातादिरोगा नश्यन्ति । एतस्याऽनुपानकाथ=भूनिम्बं, पर्पटक, यासामूलं, कुष्ट, विष्णुक्रान्ता, तिक्तपटोल आकारकरभ , त्रिकटुक, अमृता, चित्रक भार्ङ्गी चेति सर्वाणि प्रत्येकपलिकानि सञ्चूर्ण्याऽष्टौ भागान्विधायैक भाग २४ तोलके जले निक्षिप्याऽष्टभागाऽवशेषितेन काथेन मधुमिश्रितेन सहैका वटी सेवनीया । श्वासकासाद्युपद्रवयुता विषमशीतसन्निपातादयो निवर्तन्ते । आर्द्रकयूषान्न पथ्य तक्रान्न वा विधेयम् । ( व्यास० )

## १९ कान्तसिन्दूरम् ( प्रथमम् )

चुम्बकलोह शर्करीकृत्याऽजारसेन सयोज्य मृत्पात्रे निक्षिप्य सप्तकपटमृत्तिका दत्त्वैकविंशतिदिनपर्यन्त भूगर्ते स्थापनीयम् । एतत्पञ्चपलमित गृहीत्वा गन्धकाऽयश्चूर्णपारदान् पञ्चपञ्च पलिकान् खल्वे निक्षिप्य जम्बीररसेन यामचतुष्टय मर्दयित्वा शुष्का चक्रिका भूक्ष्मृन्मयपात्रेऽवरुद्ध्याऽष्टयामपर्यन्त गाढाग्निना विपचेत् । एतत्तण्डुलमानतो गुञ्जापर्यन्त रोगबलाबल निरीक्ष्यापयोज्यम् । अजाक्षीरेण सेवित हृद्रदयज्वलनसङ्ग्रहणीकामलापाण्डुश्वयथुवातमेहाश्मिमूलीकरोति । रक्तवृद्धिर्भवति शरीरमयस्सदृशञ्च । मुद्ग , सूरण, तुवरी, पटोल, शिग्रुशिम्बी, भिण्डिका, रथिकापत्र, शरद्भिका, औदुम्बरफलानि, गोघृतक्षीरतक्राणि, शुष्कमामलकलेहश्च पथ्यम् । तिन्तिडी, आरकवस्तूनि स्त्रीसम्पर्कश्च सुतरां वर्जनीयम् । ( अगस्त्य० )

## २० कान्तसिन्दूरम् ( द्वितीयम् )

पूर्वोक्तरीत्या शुद्धकान्त गन्धकञ्च प्रतिपञ्चपल गृहीत्वा जम्बीररसेनैकयाम मर्दयित्वा गजपुट देयम् । पुनः प्रतिपुट पञ्चपल गन्धकं नियोज्य त्रीणि गज पुटानि दत्त्वा कूपिकायां स्थापनीयम् । तदनन्तर वटप्ररोहमूलत्वच गन्धकञ्च प्रति पञ्चपल खल्वे स्तन्येनैकयाम कुक्कुटाण्डश्वेतद्रवेण च द्वियाम मर्दयित्वा शरावसम्पुटेऽवरुद्ध्य गजपुटपाको पलाशकुसुमवर्णं भस्म भवति ( अत्राऽग्निस्थितौ सन्देह ? धूलम वेष्टयम् ) । एतन्मिश्रितं पूर्वोक्तमौषधञ्च खल्वे निक्षिप्याऽर्कक्षीरेण विमृद्य शुष्कचक्रिका शरावयोरवरुद्ध्य गजपुटदानात्स्वर्णवर्णमिश्रित सिन्दूर भवति । एतत्तण्डुलप्रमाण मधुना मण्डलपर्यन्त सेवित सूक्ष्म गदेरोगतगुल्मवातव्याधिमण्डवातगुल्मनलोदरान्त्रवृद्धि प्रचण्डमारुत साध्यासाध्यारयति ॥ ( अगस्त्य० )

## २१ कालकण्ठमेहनारायणसिन्दूरम्

रसभस्म ८ तोलक, गन्धक तोलकश्चैकैकतोलक, मन शिला रससिन्दूर यशदभस्म चार्द्धार्द्धतोलक, दरद, तन्तुरजत, वङ्गनागताम्रभस्मानि प्रत्येक पाद तोलकानि, तनुतरसुवर्णपत्रमर्द्धतोलक, शुद्ध विषमर्द्धतोलक, एतानि सम्यक् चूर्णितानि खल्वे निधाय पीतपुष्पभृङ्गरसेन कन्यारसेन च प्रतियामचतुष्टय, पलाशपुष्पद्रवेण पारसपिप्पलपुष्परसेन च प्रतियामद्वय मर्दयित्वा शोषयेत् । ततो रक्तकार्पासपुष्पाणि दशतोलके जम्बीररसे निधायाऽऽतपे स्थापनीयानि । जम्बीररसो यदा श्वेतरूपो भवेत्तदा पुष्पाणि निष्कास्य तेनैव ( जम्भाम्भसा ) यामचतुष्टयमनारत मर्दयित्वा शुष्क चूर्ण काचकूपिकायामवरुद्ध्य वालुकायन्त्रे दीपमध्यतीक्ष्णाग्निभि प्रहराष्टयाम पाकान्नीलस्वर्णमिश्रित रक्तवर्णमौषध सम्पद्यते । एतत्सिन्दूरमर्धगुञ्जापरिमित मधुना सेवित चेद्गुल्म महोदरशूलपाण्डुश्वयथ्वग्निमान्द्यदाहातिसारमूलग्रहण्यादयो वहुमूत्ररोगा निवर्तन्ते । गुडूचीसत्त्वेन सह मण्डलपर्यन्त सेवित सद्यस्थिनाडीमासगतप्रमेहान् गम्भीरारकादान् ( सहजव्याधीन् ), स्वप्नस्खलन, मुखपाक, सूर्यावर्तादिशिरोरोगान् सर्वान्नेत्ररोगाश्च नाशयति । अनेन रक्तवृद्धिधातुस्तम्भौ जायेते । पथ्य रोगानुरूपम् ( व्यास० )

## २२ कालाग्निरुद्रभैरवरसः

पारदवैक्रान्तत तुरजतताम्रलोहसुवर्णमुक्तानां भस्मानि कान्तसिन्दूरञ्च सर्वाणि समभागानि खल्वे निक्षिप्याऽऽर्द्रकभृङ्गचित्रकमूलत्वग्रसै प्रत्येक दिन मर्दयित्वा विशोष्य गुञ्जाप्रमाण मधुना सेवनीयम् । एतेनाऽजीर्णाऽग्निमान्द्याऽतिसारमेहज्वरा निवर्तन्ते । ग्रहणीपाण्डुमहावातश्वेतहारिद्रवहुमूत्रमधुमेहादयो नश्यन्ति । शरीर पुष्ट स्वर्णरूपञ्च भवति । पथ्यममो रोगोचित । ( व्यास० )

## २३ कालिङ्गयादिलवणम्

इन्द्रवारुणफलरस २४ तोलक , अम्ल दधि १० तो , काचलवण, सौवर्चलटङ्कणक्षारा , पारद भस्म, शुद्धपारदग धकौ चैतानि प्रत्येकं सपादतोलकानि, समुद्रलवण १२ तो० श्वेतनारदमर्धतोलक शुद्धजयपालबीजमर्धतोलक गृहीत्वा चूर्णीकृत्य पूर्वोक्तरसे दध्नि च मेलयित्वा मृद्भाण्डे क्षाराऽपवर्त पार्श्व कृत्वा स्थापयेत् । एतद्गुञ्जामित नालगुडेन पुराणगुडेन वा प्रात सायं सप्ताहपर्यन्त सेवनीयम् । एतेन वातकफमासशर्करोपूरितमहोदराणि, मूत्राऽवरोध लिङ्गनालदाह , शल्यक्रियाप्रतिरोधवातान्या नश्यन्ति ।

अण्डवायुपाणिपादशोथाश्च निवर्तन्ते । वातिकान्विवर्ज्यैच्छापथ्यम् ॥ ( व्यास० )

## २४ कृष्णाभ्रसिन्दूरम्

कृष्णधान्याभ्रकमर्कमूलत्वक्कषायक्षीरसकण्टकमारिषपत्रस्वरसवटजटाकषायक्षीरपीतभृङ्गराजस्वरसैः क्रमेण चतुर्यामं विमृद्य चक्रिकां विधाय सम्यक् शोषयित्वा प्रत्यौषधं गजपुटं दद्यात् । अन्ते प्रत्येकपले सार्धसप्तमापिकामृपरक्षारसुधां संयोज्य स्तन्येनैकयामे मर्दयित्वा शुष्कां चक्रिकां विधाय पक्केष्टिकया मूषां निर्माय तस्यां चक्रिकामवरुध्य गजपुटो देयः । विद्रुमवर्णं निश्चन्द्रिकमभ्रकसिन्दूरं निष्पद्यते । एतच्च सिन्दूरं सर्वरोगहरं भवति । विल्वादिरसायनेन सह पित्तपाण्डुकामलामेहान्नाशयति । खण्डार्द्रकचूर्णेन लेहेन वा पित्तगुल्मपुराणशूलादीन्नाशयति । श्वेतव्याघ्री ( तेङ्गवाकुडु ) फलचूर्णेन सह श्वासकासाद्युपद्रवसहितक्षयरोगो निर्मूलो भवति । मधुना वातमेहाः, गोघृतेन मधुमेहः, त्रिकटुकेन ज्वरादयश्च नश्यन्ति । अयःसिन्दूरमभ्रकसिन्दूरञ्च भृङ्गराजचूर्णे मेलयित्वा मधुना सहैकविंशतिदिनपर्यन्तं मण्डलपर्यन्तं वा सेवनेन मेहज्वरमेहव्रणादयो नश्यन्ति । (अगस्त्य०)

टि०—विल्वादिरसायननिर्माणक्रमः=विल्वमूल छायाशुष्क कृत्वा चूर्णीकृत्य १० पलपरिमित २८८ तोलके जले निक्षिप्य मृन्याने ४८ तोलकावशेष पाक कृत्वा बीजपूररस २० तोल्क, दाडिमफलरस २० तोल्क, पुराणनालगुड १२ तोल्क, पूर्वोक्तपाके निक्षिप्य लेह्यपाकसमये नागरंद्विपल, पिप्पलीमूल ३ पल, पिप्पली २॥ पला, शटी सपादतोल्का, तालीसपत्र सपादतोल्क, नागकेशर २ पल, मरिचानि ४ पलानि, चित्रकैलाबीजे १–१ पले, त्वक् १ तोल्का, श्वेतजीरक ४ तोल्क गृहीत्वा वस्त्रपूत चूर्णयित्वा लेह्यपाके संयोज्य गोघृत ५ पल, मधु ३ पल मिश्रयित्वा लेह्यपाकेनाऽवतार्य आमलकप्रमाण प्रत्यह सेवनीयम् । एतेन पित्तकामलापाण्डुमेहपैत्यवमनहिक्काश्वासकासतृल्पीनससक्ष्यग्रहण्यश्वेदकालास्रावाऽरोचकोदरज्वलनशरीरभ्रमणादयो रोगा नश्यन्ति । अनेन लेह्येनाऽस्य सिन्दूर कान्तसिन्दूर वा संयोश्योपयुक्ते सति महती धातुपुष्टी रक्तवृद्धिश्च भवति ॥

## २५ क्षयकुलान्तकरसः

तालकमौक्तिकसुवर्णरजतवङ्गभस्मानि समभागानि, चन्द्रसारः ( भीमसेनकर्पूरम् ) विद्रुमभस्म च सर्वचतुर्थांशं खल्वे निक्षिप्य वासापत्ररसेन यामचतुष्टयं, श्वेतव्याघ्रीरसेन च यामद्वयं विमृद्य चक्रिकां विधाय वालुकायन्त्रे दिवसक्लिप्तपूजापुरःसरं यामद्वयपर्यन्तं दीपाग्निना पाकं विधाय स्वाङ्गशीतलं ग्राह्यम् । एतदर्धगुञ्जापरिमितं मधुना सहाऽर्द्धमण्डलमेकमण्डलं वा सेवितं सन्मेहरक्तश्वासकाससंयुक्तान् सकलोपद्रवयुतान् षण्णवतिसङ्ख्याकक्षयान्नाशयति । मधुमेहबहुमूत्रमेहज्वरकुष्ठादीनपि निहन्ति । शरीरं सुवर्णच्छायं करोति । पथ्यक्रमस्तु यथोचितः । तिन्तिडीरसो धूमपानञ्च दूरतो वर्ज्यम् । ( अगस्त्य० )

## २६ गण्डौषधम्

कुन्दनपत्राणि (अपरञ्जी), वस्त्ररजततन्तवः, शुद्धमुक्ता, विद्रुमः, यष्टिमधुकं, लवङ्गं, पिप्पली, रुद्राक्षः, कुष्ठं, आकारकरभः, कृष्णसारश्रृङ्गम्, रससिन्दूरम्, वासामूलञ्चैतानि सममभागानि वस्त्रशोधितानि स्तन्येन दिनद्वयं विमृद्य शोषयित्वा मधुनि मेलयित्वा रजतसम्पुटे स्थापनीयम् । सन्निपातप्रकोपे रजतशलाकया किञ्चिदुद्धृत्य रसनायां मर्दनीयम् । एतेन जिह्वाकण्टकाः परस्त्रीसाङ्गत्यदोषः वमनहिक्काद्युपद्रवयुतास्त्रयोदश सन्निपातसञ्जातविकारास्सर्वेऽपि नश्यन्ति । एतद्गण्डौषधं तालुमूले निधाय सावधानतया रस आस्वादनीयः । ( व्यास० )

## २७ गन्धकरसायनम् ( प्रथमम् )

अमलसारगन्धकचूर्णं चतुर्थांशघृतेन सह द्रवीकृत्य गोक्षीरे निर्वापयेदिति साधारणी शुद्धिः । विशेषतो गोक्षीरेण भावयित्वा भूपुटविधानेन गालयित्वा गोक्षीरे निर्वापयेत् । अस्य विवरणम्—गोक्षीरेण पादभागन्यूनं मृद्भाण्डमापूर्य मुखोपरि सूक्ष्मं वस्त्रं वस्त्रोपरि गन्धचूर्णमास्तीर्य शरावेण पिधाय सन्धिबन्धनं कृत्वा एतत्पात्रं गर्ते भूसमं निधाय सन्धिपर्यन्तं मृदाऽऽलिप्य शरावोपरि२५ उत्पलकैः पुटो देयः । गन्धकं द्रवीभूय वस्त्रच्छिद्रैर्मणिवत् क्षीरे निपतति । परेद्युः प्रातरुद्धृत्योष्णोदकेन क्षीरस्थं गन्धकं प्रक्षाल्य चूर्णीकृत्याऽऽतपे शोषयेत् एषैका भावना । एवमेव गोदधि, इक्षुरसः, तण्डुलीयकरसः, जलकुम्भी (अन्तर्तामराकु), मूकूष्माण्डं, वास्तुकं, भृङ्गराजः, त्रिफला, चातुर्जातकं, चित्रकं, आर्द्रकं, ''' '( छिन्नियाकु ), मधु, पञ्चामृतं, कृष्णतुलसी, गोघृतञ्चैतेषां द्रवेषु पूर्वोक्तप्रकारेण मर्दनादिविधिपूर्वकशोधितं गन्धकं ४ पलं, गोक्षीरे शोधितं हेमक्षीरीचूर्णं ४ पलं, वाकुचीचित्रकमूलत्वग्ब्राह्मीकृष्णहिलामूल ( नल्लवुप्पिवेरु ) तालीसपत्राऽश्वगन्धापारसपिप्पलकण्टकिपलाशमूलत्वक्चम्पकपुष्पाणां प्रत्येकपलं गृहीत्वा सम्यक् चूर्णीकृत्य पलत्रयां सितोपलां निक्षिप्य मधुना यामचतुष्टयं विमृद्य चीनपात्रे स्थापयेत् । पादतोलकमेतल्लेहं प्रातः सायमेकमण्डलमर्द्धमण्डलं वा सेवनीयम् । अनेन मेहग्रन्थयः, क्षुद्रपिडिकाः, कृष्णमेहः, मेहवायवः, मेहशूलाः, उपदंशाः, लिङ्गव्रणाः, योनिग्रन्थयः सूचीमुखीव्यापचेत्यादयो रोगा निवर्तन्ते । (व्यास०)

## २८ गन्धकरसायनम् ( द्वितीयम् )

पूर्वोक्तप्रकारेण शोधितं गन्धकं ६ पलं, त्रिकटुकचित्रकवाकुचीबीजान्येकैकपलानि चूर्णितानि गन्धेन सह मेलयित्वा समभागां शर्करां मिश्रयेत् । अथवा पञ्चदशपलायाः शर्करायास्तन्तुलीं विधाय सर्वमपि चूर्णं पाके निक्षिप्य द्वे द्वे पले घृतमधुनी मिश्रयित्वा प्रत्यहं कलाद्वयप्रमाणं सेवनीयम् । एतेन सर्वोपदंशकुष्ठव्याधयो मेहग्रन्थयश्च निवर्तन्ते । दुग्धाद्यं पथ्यम् । ( व्यास० )

## २९ गन्धकामृतलेहम्

शुद्धममलसारगन्धकं ८ पलं, आमलकीचित्रकत्वङ्नागरमरिचाऽश्वगन्धाहरीतकीबिभीतकपिप्पल्यः एकैकतोलिकाः, पद्मबीजं, चीनहेमक्षीरी, मुशलीश्चैकैकपलिकां गृहीत्वा चूर्णीकृत्य २४ तोलके गोक्षीरे १६ पलां सितोपलां संयोज्य मृद्भाण्डे पाकसमये पूर्वोक्तममलसारगन्धकं मेलयित्वा १० पलं मधु निक्षिप्य लेहपाकमधतार्य प्रत्यहमामलकप्रमाणं प्रातःसायमेकविंशतिदिनपर्यन्तं सेवनीयम् । एतेन शारीरव्रणविपादिकाकुष्ठोपदंशकुक्कुटशिरोपदंशयोनिकुट्टिमनीलमेहाद्यो नश्यन्ति धातुवृद्धिश्च भवति । क्षीरान्नं, गोदधि, मुद्गमाषवटकाश्चाऽनुकूलाः । ( अगस्त्य० )

## ३० गोरोचनवटी ( प्रथमा )

शुद्धकान्तबिभीतकाऽऽमलकबव्बूलपुष्पगोरोचनकुष्ठचित्रकमूलानि एकैकपलानि; मनःशिला रसकर्पूरश्च प्रतिसपादतोलकं खल्वे निक्षिप्य चूर्णीकृत्य ··· ( कलिंजरु ) रसेनैकादश दिनानि मुक्तावर्णीरसेन च दिनद्वयं मर्दयित्वा मुद्गप्रमाणा वटीः कुर्यात् । मधुमिश्रितस्तस्त्वेन बालानां सन्निपाताऽग्निमान्द्यदोषाः शीताधिस्यश्च नश्यति । अनुपानभेदाद्याऽन्यरोगेषु यथायथमुपयोज्यम् । ( अगस्त्य० )

## ३१ गोरोचनवटी ( द्वितीया )

गोरोचनकेशररसकर्पूररसिन्दूराऽभ्रसिन्दूरहिममारेलाबीजलवङ्गकुष्ठजातीफलाऽऽकारकरभाणि समभागानि विचूर्ण्य षोडशभागाऽवशिष्टेन श्रीचन्दनक्वाथेन यामचतुष्टयं मर्दयित्वाऽष्टमागावशिष्टेन लवङ्गक्वाथेनैवमेव शतपत्रार्केण ( गुलाबजल ) च यामद्वयं विमृद्य गुञ्जामाना वटी कार्या । बालकानां स्तन्याऽनुपानेन देयाऽनया कण्ठकुब्जप्रभृतयस्सन्निपाता निवर्तन्ते । अनुपानविशेषैः श्लेष्मज्वरशीतज्वरवातसन्निपातत्रोषधनुर्वातसर्वाङ्गशूलादयो नश्यन्ति । बालानां मातुः पथ्यं देयम् । (व्यास०)

## ३२ चण्डमार्तण्डरसः

वङ्गलवणं, मल्लगौरीपापाणयोर्भस्म, कान्तसिन्दूरं, गन्धकं, तालकभस्म, मृद्दारशृङ्गं, रसभस्म चैतानि सूक्ष्मचूर्णितानि काचकूपिकायां निक्षिप्य यामचतुष्टयं क्रमाग्निना पक्वौषधं ग्राह्यम् । एतत्तण्डुलपरिमाणं सेवितं सत्सर्वान्रोगाग्नाशयति । स्तन्येन, मधुना, त्रिकटुकक्वाथेन वा सेविते विषदोषाः सन्निपातज्वराश्च निवर्तन्ते । पथ्यं यथोचितम् । ( व्यास० )

## ३३ चतुर्विधवन्ध्यत्वहरतैलम्

शुभ्रैरण्डबीजतैलं, कपिलागोक्षीरं, नारिकेलजलं, पाण्मासिकाम्लमण्डं प्रत्येकं १२० तोलकं, औदुम्बरसीधु कादम्बरी ( क्षुद्रखर्जूरीसीधु ) च ८०-८० तोलकं, वनतुलसी ( रजगुर ), कृष्णतुलसी, जलपिप्पली ( घुक्किनाकु ) कृष्णकाकमाचीकोकिलाक्षभृङ्गारवेल्लानां पत्राणि, पारसपिप्पलपुष्पाणि ( गेङ्गरावि चेट्टु ), भूतुलसीपत्रं ( अजगन्धा ), ब्राह्मी (वलारी),··· ··(चेप्पुतट्टाकु), भूकूष्माण्डपत्रं (नेलगुलमडिआकु ), बृहदग्निमन्थपत्रं ( गुहृतकाली ), कर्पूरवल्ली ( पत्रयवानिका, कप्परल्ली ) चेतियनस्पतयः । मरिचचीनहेमक्षीरीनागरजातीपत्रकेशरमृगमदद्राक्षखर्जूरैलाबीजजातीफलमायाफलगोरोचनरसकर्पूराणि प्रत्येकं सपादतोलकानीति आपणद्रव्याणि । नागरङ्ग ( चीनापण्डु तै० सन्तरा० हिं० ) द्राक्षारक्तरम्भादाडिमबीजपूरखर्जूरीणां फलरसाः प्रत्येकं ३० तोलकपरिमिताः । अथ तैलपाकक्रमः—आदौ सर्वान्वनस्पतींश्छायाशुष्कान्विधाय चूर्णीकृत्याऽऽपणद्रव्याणि वस्त्रशोधितानि कृत्वा एरण्डतैलादिकादम्बरीपर्यन्तान्, द्राक्षादिखर्जूरीफलान्तान्द्रवान् महति मृत्पात्रे निक्षिप्य तैलावशेषं पाकं कृत्वा पूर्वोक्तचूर्णानि सर्वाणि मेलयित्वा मन्दाग्निना पाकं विधाय स्वाङ्गशैत्ये गोरोचनं, मृगमदं, रसकर्पूरं, हिङ्गुलश्चैतच्चतुष्टयमपि चूर्णीकृतं तैले निक्षिप्य सम्यगालोड्य मुखबन्धनं विधाय १० दिनपर्यन्तं निर्वातप्रदेशे संरक्षणीयम् । ततः प्रातः सायं प्रत्यहं पादतोलकपरिमितं तैलं दुग्धतोयाभ्यां मण्डलपर्यन्तं सेवनीयम् । अयं गर्भधारणयोगोऽनुभवसिद्धः । ( अगस्त्य० )

## ३४ चित्रानन्दभैरवरसः

शुद्धरसविषत्रिकटुत्रिफलाजयपालबीजानि समभागानि जम्बीररसेन यामचतुष्टयं विमृद्य गुञ्जाप्रमाणां वटीं कृत्वा मधुमिश्रिताऽऽर्द्रकरसेन त्रयोदशसन्निपातेषु प्रयोजयेत् ।

## ३५ चिन्तामणिरसः

शुद्धं पत्रतालकं, सर्वीरं, मल्लगौरीपाषाणदरद-पारदाभ्रभेदि (कासीस) स्फटिकापालतुत्थीपर-क्षारशिलाक्षारटङ्कणानां भस्मानि, सैन्धवं, अयस्ता-म्रसिन्दूरे, मनःशिला, लवङ्गं, एलाबीजं, त्रिफला, श्रीगन्धचूर्णं (श्वेतचन्दनं), देवदारु, यवानिका, कुष्ठं, नागकेशरं, विष्णुक्रान्ता, खुरासानिका, कटुरो-हिणी, जातीफलं, द्राक्षा, यष्टिमधुकं, नरसारः, चन्द्र-सारः, जातीपत्रं, खर्जूरीफलं, लशुनं, त्रिकटुकं, जय-पालश्चेतेषु शोधितव्यवस्तूनि सम्यक् शोधयित्वा भर्जनीयवस्तूनि स्वर्णच्छायं भर्जयित्वा सर्वाणि चूर्णी-कृत्य पीतभृङ्गनिर्गुण्डीविष्णुक्रान्तारसैः प्रत्येकेन सप्त-दिनं मर्दयित्वा कृष्णतुलसीरसेनैकदिनं विमृद्य मुद्ग-प्रमाणा वटीः कृत्वा शृङ्गे निक्षिप्य शिवशक्तिगणपति-पूजां विधाय सुवासिनीब्राह्मणपूजाञ्च कृत्वाऽन्नदा-नादिना सन्तोष्याऽनन्तरमेतदौषधमुपयोक्तव्यम्। चन्द्रसारतक्कोलशिलातन्त्वा (कलनार) हुलीपुष्प-मुञ्जातकानां समभागचूर्णे समां सितोपलां मिश्रयित्वा पादतोलकपरिमिते चूर्णे चिन्तामणिवटीमेकां संयोज्य मधुना सह दद्यात्। अनेन रक्तक्षयश्वासकासादयो निवर्तन्ते। पुष्करपुष्पक्वाथेनाऽण्डवायवः, अश्वगन्धा-चूर्णेनाऽन्त्रवृद्धिर्नश्यति। किञ्च-भृङ्गरसेन श्वास-कासौ, जम्बीररसेन भृङ्गरसेन वा वटीं संघृष्य नेत्राञ्जने कृते शुक्लपटलादयः षण्णवतिर्नेत्ररोगा नश्यन्ति। सकलसङ्ग्रहणीनां शर्करायुकरम्भापुष्परसेन त्रिफलाकषायेण वा देयः। कामलाश्वयथुरोगयोर्म-रीचचूर्णमिश्रितगोमूत्रेण देयम्। निम्बपत्रविभीतकी-मरिचनागराणां चूर्णेन मधुमिश्रितेन सह विषमवात-ज्वराणां, आर्द्रकरसेन सुखसन्निपातिनां देयम्। ज्वर-सञ्जातदाहे शर्करया, चतुष्षष्टिविषाणां जम्बीररसेन सङ्घृष्य क्षतस्थाने लेपनीयम्। वृश्चिकदंशे जलेन क्षतस्थाने लेपनीयम्। नेत्राञ्जनमपि देयम्। अन्त-र्ज्वराणां दध्ना, त्र्याहिकज्वराणां कारवेल्लक्वाथेन, पित्तश्लेष्मज्वराणामार्द्रकरसेन, चतुरशीतिवातानां निर्गुण्डीरसेन, कपालकुष्ठग्रन्थिशूलविषरोगेषु त्रिक-टुकचूर्णेन दातव्यम्। (व्यास०)

## ३६ ज्वरकुठाररसः

एकपलं गौरीपाषाणं सूक्ष्मवस्त्रे पोट्टलीं बद्ध्वा चतुष्षष्टितोलकशिलासुधाखण्डे दोलायन्त्रेण याम द्वयं स्वेदयित्वा ग्राह्यम्। एवं शोधितं गौरीपाषाणं, गन्धकं, तालकं, तुत्थं (पाल्तुत्तं), कटुरोहिणी, जय-पालबीजानि प्रत्येकमर्धतोलकानि सम्यग्विचूर्ण्य क्षु-द्रकारवेल्लपत्ररसेन यामचतुष्टयं विमृद्य माषप्रमाणां वटीं कृत्वाऽऽर्द्रकरसेन दद्यात्। शीतप्रधानज्वरा न-श्यन्ति। एतस्याऽनुपानचूर्णम्=तालीसनागरपिप्प-लीमरिचाकारकरभान् समभागान् विचूर्ण्याऽस्मात्पा-दतोलकेन मधुमिश्रितेन चूर्णेन सह दिनत्रयमेवनात् उग्रज्वरास्सन्निपातादयो निवर्तन्ते। दोषप्राबल्ये सति वक्ष्यमाणं वीरभद्राञ्जनमपि नेत्रयोर्योज्यम्। पित्तप्रकृ-तीनां शुष्कतिन्तिडीपत्रोपयोगः कार्यः। (व्यास०)

## ३७ ज्वरगजाङ्कुशरसः

शुद्धः पारदः, आमलसारगन्धकः, विषं, ताम्र-भस्म, द्विजीरकं, चित्रकत्वक्, पञ्चलवणानि, यव-क्षारः, नरसारः, कान्तसिन्दूरम्, हरीतकी, आम-लकी, विभीतकी, कटुरोहिणी, विडङ्गं, टङ्कणश्चैतानि समभागानि सम्यग्विचूर्ण्य चीनपात्रे निक्षिप्य अम्ल-दाडिमीफलरसेन भृङ्गराजरसेन चाऽऽप्लाव्य दश-दिनपर्यन्तमातपे शोषयित्वा पुनः खल्वे निक्षिप्याऽ-म्लदाडिमीफलरसेन यामद्वयपर्यन्तं मर्दयित्वा शुष्कं चूर्णं चीनपात्रेऽवरुध्य स्थापनीयम्। गुञ्जाद्वयमार्द्र-करसेन सह सेवितं विषमशीतज्वरदोषाऽग्निमान्द्यस-न्निपातादीन्नाशयति। घृतं, पुराणगुडः, नवनीतं, आर्द्रकरसः, मधु, एतदनुपानैरष्टविधगुल्मरोगो नश्यति। वातपदार्थानन्तरं पथ्यम्। तिन्तिडीतक्र-धूमपानादयो वर्ज्याः। (अगस्त्य०)

## ३८ ज्वरफणिगरुडरसः

शुद्धपारदगन्धकविषाणि एकैकतोलकानि, हिङ्गुलं ४ तो., जयपालबीजानि ८ तो० गृहीत्वैकत्र सञ्चूर्ण्य धत्तूरमूलक्वाथेन यामचतुष्टयं विमृद्य मरिचप्रमाणा वटिकाः कुर्यात्। मधुमिश्रिताऽऽर्द्रकरसाऽनुपानेन वातपित्तज्वरः, मरिचचित्रकमूलविष्णुक्रान्ताभूनिम्ब क्वाथेन सन्निपातदोषज्वरः, भृङ्गराजमूलविम्बीमूल-सकण्टककर्कटमूलत्रिकटुक्वाथेन विषपाण्डुश्वयथु-ज्वरा नश्यन्ति। स्तन्येन मधुना वा सङ्घृष्य सन्नि-पातज्वरेषु नेत्राञ्जनं देयम्। पथ्यं रोगोचितम्। अल्प-मात्रया बालानामप्युपयोक्तव्यम्। (व्यास०)

टि०—कृष्णभूपालीये गरलमपि दृश्यते। तत्रैव सर्वेषां समभाग तया योग विधाय रसञ्च निष्कास्य धत्तूरस्थाने जम्बीरं नियोज्याऽऽग्नेयास्त्रेति नाम स्थापितम्। तदभिप्राये ग्रन्थकर्तैव प्रष्टव्य।

## ३९ ज्वराङ्कुशभैरवरसः

विशुद्धपारदः, विषं, गन्धकश्चैकैकपलं, जातीफल-मर्धपलं, पिप्पली १॥ पला, सर्वं चूर्णीकृत्य ताम्बूली-स्वरसेनाऽऽर्द्रकस्वरसेन च प्रति यामद्वयं विमृद्य गुञ्जाप्रतिमां वटीं कृत्वा मधुमिश्रिताऽऽर्द्रकरसाऽनु-पानेन प्रयोगे वातपित्तश्लेष्मज्वरा नश्यन्ति। यवा-नीकल्केन द्रवेण वा शीतज्वरसञ्जातज्वरातिसारा

निवर्तन्ते । ज्वरसञ्जाताऽतिसारसङ्ग्रहण्यादीनामनुपानविशेष =अतिविषा, मरिच, नागर, तालीसपत्र, पोस्तु चेति प्रतिसपादतोलक सङ्क्षुण्ण २४ तोलकजले मृन्मयपात्रे निष्क्वाथ्य चतुर्भागाऽवशिष्टमवतार्य भागद्वय प्रकल्प्यैकभागमेकवटिकया सायमपर प्रातश्च दद्यादेव त्रिचतुराणि दिनानि कृते पूर्वोक्तव्याधयो निवर्तन्ते । अम्लदाडिमीफलरसेन वमनहिक्के नश्यत ।अश्वगन्धा, अनन्तमूल, हेमक्षीरी (परङ्गीचक्का ) भृङ्गकूष्माण्ड, कुमारीकन्दश्चेति प्रत्येकमेकपलं चूर्णीकृत्य पादतोलकेन चूर्णेन सहैका मात्रा सेविता चेदस्थिगतसोपद्रवो ज्वरो नश्यति । शीतपदार्था वर्ज्या । ( व्यास० )

## ४० ज्वराङ्कुशरसः ( महदादि ) १

द्विपल मल्लपाषाण कारवेल्लतण्डुलीयकपत्ररसेन प्रति यामचतुष्टय मर्दयित्वा शरावसम्पुटित विधाय घनतया सप्त मृत्तिका दत्त्वोत्पलकत्रयेण पुट दद्यात् । तत खल्वे निक्षिप्य त्रिकटुकक्वाथेन यामचतुष्टय विमृद्य मुद्गपरिमिता वटी कुर्यात् । मधुमिश्रितश्वेतजीरकचूर्णे पक्का वटीं सयोज्य सेवनात्सर्वे ज्वरास्तत्क्षण निवर्तन्ते । महाज्वरेषु त्रिराष्टृत्ता वटी योजनीया नाऽधिका । तिन्तिडी वर्ज्या । क्षीरान्न गोधूमखण्डयूषश्चाऽनुकूल । अपि चाऽनन्तमूलक्वाथेन वातज्वर , नागरक्वाथेन पित्तज्वर त्रिकटुकचूर्णमिश्रिताऽऽर्द्रकरसेन श्लेष्मज्वर , धान्यकक्वाथन तापज्वर , दध्ना सङ्ग्रहण्यतीसारो, भृङ्गराज ( गुण्टगलगरा ) रसेन ज्वरसञ्जातसर्वाङ्गशूलादयो नश्यन्ति । नेत्राञ्जनमपि कर्तव्यम् । अतिसाराणां गिट्टिगेड्डुलरस ( ऊपरे पलाण्डुसदृशकन्दो यस्य पत्राणि तालमूलीसदृशानि भूहन्ति च भवन्ति इति केचिद्वदन्ति अन्ये तु शृङ्गाटकमाहु ), अण्डवाते लताकरञ्जपत्ररस , स्त्रीसम्भोगाय कामकस्तूरिका (मरवक) पत्ररस , सर्वसन्निपातेषु धत्तूरपत्ररस , अजीर्णस्योष्णोदकम्, अर्शसा मूलकरस , श्वयथुपाण्डुकामलासु स्रष्टाऽतिविषाक्वाथ , दुष्टसर्पादिदंशनस्य बीजपूररस , वृश्चिकविषस्य गोमयम्, निम्बबीजतैल, मयूरपिच्छभस्म च । एवमनुपान यथोचित देयम् । सर्वविषाणामपि यत्र क्षत तत्र मयूरपिच्छभस्मना सह निम्बबीजतैलमिश्रितेन क्षतस्थान लिम्पेत् । आर्द्रकरसेन नेत्रे अञ्जयित्वा यद्यधस्तातपदयेपातालपर्यन्त दृष्टि प्रसरति । पिशाचग्रस्तानां केवलतिलतैलेन मिश्रयित्वा नेत्राञ्जनं कृतं चेद्भूतप्रेतपिशाचादय पलायन्ते । रक्तमूलाशान्याधेर्नवनीतेन सहाऽऽसन लेपनीयम् । वन्ध्यास्त्रीणां परिपक्ववटबीजचूर्णेन ऋतुकाले एकवार दद्यात् । एवमृतुत्रये । सर्पवृश्चिकोन्मत्तशुनकविषादौ पूर्वोक्ततैलेन सह क्षतस्थाने नियोजनीयम् । इत्येवमेवाऽनुपानभेदेन सर्वव्याधिषु नियोजनीयम् । शिवशक्तिपूजा कार्या ॥ ( अगस्त्य० )

## ४१ ज्वराङ्कुशरसः ( द्वितीय ) २

शुद्धपारदगन्धकदरदटङ्कणविषतालकजयपालत्रिकटुत्रिफलाश्चैतानि प्रत्येक सपादतोलकानि गृहीत्वा चूर्णीकृत्य भृङ्गराजरसेन यामचतुष्टय मर्दयित्वा मरिचप्रमाणा मात्रा कुर्यात् । कृष्णतुलसीरसेन वालकज्वराणां दातव्यम् । मरिचकल्केन वातशूला शीतज्वराश्च नश्यन्ति । चित्रकपिप्पलीमूलतिक्तपटोलभूनिम्बविष्णुक्रान्ताऽनन्तमूलयष्टिमधुकाऽऽकारकरभत्रिकटुत्रिफलाऽमृताजम्बीरीफलतालीसपत्रशीरश्रीचन्दनानां क्वाथेन पुराणवातपित्तश्लेष्मद्वन्द्वाऽऽहिका जीर्णज्वरा नश्यन्ति । षाण्मासिकवयस्कमारभ्य त्रिहायणवय पर्यन्त बालानामेकवारमौषध मुद्गप्रमाण देयम् । तरुणादीनां चणकप्रमाणम् । अम्लरसा वर्ज्य शीतलवातपदार्थाश्च । अस्मिन्नौषधे रसगन्धकादयो विधिना शोध्या । प्रसूतस्त्रीणां ज्वरादौ त्र्यहमनन्तरमेवोपयोजनीयम् । पथ्य रोगोचितम् । (व्यास०)

## ४२ ज्वराङ्कुशरसः ( महदादि ) ३

शुद्धगन्धकपारदविषमल्लपातपुण्यधत्तूरबीजमरिचानि प्रत्येकतोलकानि विचूर्ण्य कृष्णधत्तूरपत्रस्वरसेन यामचतुष्टय सम्यग्विमृद्य गुञ्जामात्रां वटी कृत्वाऽऽर्द्रकस्वरसेन सेविता चेद्विषमशीतप्रधानज्वरा निवर्तन्ते । श्वेतशर्करामिश्रितपुराणतण्डुलोष्णोदकञ्च पथ्यम् । सप्ताऽम्लपाक्य तरुणनारिकेलसर्वपापाणगर्भितान्यौषधानि वर्ज्यानि । यदाचिन्महावायुकठिनदोषमहासन्निपातकण्ठगतकफवातादिदोषैराक्रान्ताश्चेत्तदा तान्यपि प्रयोज्यानि (व्यास० )

## ४३ ज्वराङ्कुशरसः ( चतुर्थ )४

सम्यक् शुद्धमेकतोलक मल्लपाषाण पञ्चतोलके गर्दभीक्षीरे चीनपात्रे मिश्रयित्वा द्वितोलकहिङ्गुले ग्रासो देय । हिङ्गुला यदा भवति । अथ तण्डुलमात्रो मरिचक्वाथेन सह सेवितस्सर्वज्वरानाशयति । अम्लरसा वर्ज्य । आढकीयूष , भिण्डिका, गोधूमखण्डयूष , शुष्क काकमाचा (कामाता) पत्र शिग्रुशिम्बी, क्षीरान्नञ्च पथ्यम् । अत्रैव सूचनान्वितसिन्मात्राच्छ्रिते सूपात्रेऽर्द्धभाग सिक्तया पूरयित्वा सिक्तामध्ये काचपात्र निधाय तन्मध्ये दरदशर्करां निक्षिप्य योगोक्तप्रकारेण ग्रामे दद्यादित्यनुसन्धेयम् । ( व्यास० )

## ३५ चिन्तामणिरसः

शुद्धं पत्रतालकं, सक्षीरं, मल्लगौरीपाषाणदरदपारदाभ्रभेदि (कासीस) स्फटिकापालतुत्थीपरक्षारशिलाक्षारटङ्कणानां भस्मानि, सैन्धवं, अयस्ताम्रसिन्दूरे, मनःशिला, लवङ्गं, एलाबीजं, त्रिफला, श्रीगन्धचूर्णं (श्वेतचन्दनं), देवदारु, यवानिका, कुष्ठं, नागकेशरं, विष्णुक्रान्ता, खुरासानिका, कटुरोहिणी, जातीफलं, द्राक्षा, यष्टिमधुकं, नरसारः, चन्द्रसारः, जातीपत्रं, खर्जूरीफलं, लशुनं, त्रिकटुकं, जयपालश्चैतेषु शोधितव्यवस्तूनि सम्यक् शोधयित्वा भर्जनीयवस्तूनि स्वर्णच्छायं भर्जयित्वा सर्वाणि चूर्णीकृत्य पीतभृङ्गनिर्गुण्डीविष्णुक्रान्तारसैः प्रत्येकेन सप्तदिनं मर्दयित्वा कृष्णतुलसीरसेनैकदिनं विमृद्य मुद्गप्रमाणा वटीः कृत्वा शृङ्गे निक्षिप्य दिवशक्तिगणपतिपूजां विधाय सुवासिनीब्राह्मणपूजाञ्च कृत्वाऽन्नदानादिना सन्तोष्याऽनन्तरमेतदौषधमुपयोक्तव्यम् । चन्द्रसारतक्कोलशिलातल्वा (कलनार) हुलीपुष्पमुञ्जातकानां समभागचूर्णे समां सितोपलां मिश्रयित्वा पादतोलकपरिमिते चूर्णे चिन्तामणिवटीमेकां संयोज्य मधुना सह दद्यात् । अनेन रक्तक्षयश्वासकासादयो निवर्तन्ते । पुष्करपुष्पक्वाथेनाऽण्डवायवः,अश्वगन्धाचूर्णेनाऽन्त्रवृद्धिर्नश्यति । किञ्च-भृङ्गरसेन श्वासकासौ, जम्बीररसेन भृङ्गरसेन वा वटीं संघृष्य नेत्राञ्जने कृते शुक्रपटलाद्यः षण्णवतिर्नेत्ररोगा नश्यन्ति। सकलसङ्ग्रहणीनां शर्करायुक्तरम्भापुष्परसेन त्रिफलाकषायेण वा देयः । कामलाश्वयथुरोगयोर्मरीचचूर्णमिश्रितगोमूत्रेण देयम् । निम्बपत्रविभीतकीमरिचनागराणां चूर्णेन मधुमिश्रितेन सह विषवातज्वराणां, आर्द्रकरसेन सुरससन्निपातिनां देयम् ।ज्वरसञ्जातदाहे शर्करया, चतुष्पष्टिविषाणां जम्बीररसेन सङ्घृष्य क्षतस्थाने लेपनीयम् । वृश्चिकदंशे जलेन क्षतस्थाने लेपनीयम् । नेत्राञ्जनमपि देयम् । अन्तर्ज्वराणां दध्ना, ऱ्याहिकज्वराणां कारवेल्लक्वाथेन, पित्तश्लेष्मज्वराणामार्द्रकरसेन, चतुरशीतिवातानां निर्गुण्डीरसेन, कपालकुष्टग्रन्थिशूलविषरोगेषु त्रिकटुकचूर्णेन दातव्यम् । (व्यास०)

## ३६ ज्वरकुठाररसः

एकपलं गौरीपाषाणं सूक्ष्मवस्त्रे पोट्टलीं बद्ध्वा चतुष्पष्टितोलकशिलासुधाखण्डे दोलायन्त्रेण यामद्वयं स्वेदयित्वा ग्राह्यम् । एवं शोधितं गौरीपाषाणं, गन्धकं, तालकं, तुत्थं (पालतुत्थं), कटुरोहिणीं, जयपालबीजानि प्रत्येकमर्धतोलकानि सम्यग्विचूर्ण्य क्षुद्रकारवेल्लपत्ररसेन यामचतुष्टयं विमृद्य माषप्रमाणां वटीं कृत्वाऽऽर्द्रकरसेन दद्यात् । शीतप्रधानज्वरा नश्यन्ति । एतस्याऽनुपानचूर्णम्=तालीसनागरपिप्पलीमरिचाकारकरभान् समभागान् विचूर्ण्याऽस्मात्पादतोलकेन मधुमिश्रितेन चूर्णेन सह दिनत्रयसेवनात् उग्रज्वरास्सन्निपातादयो निवर्तन्ते । दोषप्राबल्ये सति वक्ष्यमाणं वीरभद्राञ्जनमपि नेत्रयोर्योज्यम् । पित्तप्रकृतीनां शुष्कतिन्तिडीपत्रोपयोगः कार्यः । (व्यास०)

## ३७ ज्वरगजाङ्कुशरसः

शुद्धः पारदः, अमलसारगन्धकः, विषं, ताम्रभस्म, द्विजीरकं, चित्रकत्वक्, पञ्चलवणानि, सद्यः क्षारः, नरसारः, कान्तसिन्दूरम्, हरीतकी, आमलकी, विभीतकी, कटुरोहिणी, विडङ्गं, टङ्कणश्चैतानि समभागानि सम्यग्विचूर्ण्य चीनपात्रे निक्षिप्य अम्लदाडिमीफलरसेन भृङ्गराजरसेन चाऽऽप्लाव्य दशदिनपर्यन्तमातपे शोषयित्वा पुनः खल्वे निक्षिप्याऽम्लदाडिमीफलरसेन यामद्वयपर्यन्तं मर्दयित्वा शुष्कं चूर्णं चीनपात्रेऽवरुद्ध्य स्थापनीयम् । गुञ्जाद्वयमार्द्रकरसेन सह सेवितं विषमशीतज्वरदोषाऽग्निमान्द्यसन्निपातादीन्नाशयति । घृतं, पुराणगुडः, नवनीतं, आर्द्रकरसः, मधु, एतदनुपानैरष्टविधगुल्मरोगो नश्यति । वातपदार्थानन्तरं पथ्यम् । तिन्तिडीतक्रधूमपानादयो वर्ज्याः। (अगस्त्य०)

## ३८ ज्वरफणिगरुडरसः

शुद्धपारदगन्धकविषाणि एकैकतोलकानि, हिङ्गुलं ४ तो., जयपालबीजानि ८ तो० गृहीत्वैकत्र सञ्चूर्ण्य धत्तूरमूलक्वाथेन यामचतुष्टयं विमृद्य मरिचप्रमाणा वटिकाः किरेत् । मधुमिश्रिताऽऽर्द्रकरसाऽनुपानेन वातपित्तज्वरः,मरिचचित्रकमूलविष्णुक्रान्ताभूनिम्बक्वाथेन सन्निपातदोषज्वरः, भृङ्गराजमूलबिम्बीमूलसकण्टककर्कन्धुमूलत्रिकटुकक्वाथेन विषपाण्डुश्वयथुज्वरा नश्यन्ति । स्तन्येन मधुना वा सङ्घृष्य सन्निपातज्वरेषु नेत्राञ्जनं देयम् । पथ्यं रोगोचितम् । अल्पमात्रया बालानामप्युपयोक्तव्यम् । (व्यास०)

टि०—कृष्णभूपालीये गरलमधिकं दृश्यते । तत्रैव सर्वेषां समभागतया योगं विधाय रसञ्च निष्कास्य धत्तूररस्थाने जम्बीरं नियोज्याऽऽश्रेयावेति नाम स्थापितम् । तदभिप्राये ग्रन्थकर्तैव प्रष्टव्यः ।

## ३९ ज्वराङ्कुशभैरवरसः

विशुद्धपारदः, विषं, गन्धकश्चैकैकपलं, जातीफलमर्धपलं, पिप्पली १॥ पला, सर्वं चूर्णीकृत्य ताम्बूलीस्वरसेनाऽऽर्द्रकस्वरसेन च प्रति यामद्वयं विमृद्य गुञ्जाप्रतिमां वटीं कृत्वा मधुमिश्रिताऽऽर्द्रकरसाऽनुपानेन प्रयोगे वातपित्तश्लेष्मज्वरा नश्यन्ति । यवानीकल्केन द्रवेण वा शीतज्वरसञ्जातज्वरातिसारा

निवर्तन्ते । ज्वरसञ्जाताऽतिसारसङ्ग्रहण्यादीनामनुपानविशेष =अतिविषा, मरिच, नागर, तालीसपत्रं, पोस्तु चेति प्रतिसपादतोलक सङ्गुण्ण २४ तोल्कजले मृन्मयपात्रे निष्काथ्य चतुर्भागाऽवशिष्टमवतार्य भागद्वय प्रकल्प्यैकभागमेकत्रटिकया सायमपर प्रातश्च दद्यादेव त्रिचतुराणि दिनानि कृते पूर्वोक्तव्याधयो निवर्तन्ते । अम्लदाडिमीफलरसेन वमनहिक्के नश्यत ।अश्वगन्धा, अनन्तमूल, हेमक्षीरी (परङ्गीचक्का ) मूकूष्माण्ड, कुमारीकन्दश्चेति प्रत्येकमेकपलं चूर्णीकृत्य पादतोल्केन चूर्णेन सहैका मात्रा सेविता चेद्स्थिगतसोपद्रवो ज्वरो नश्यति । शीतपदार्था वर्ज्या । (व्यास०)

## ४० ज्वराङ्कुशरसः ( महदादि ) १

द्विपल मल्लपाषाण कारवेल्लतण्डुलीयकपत्ररसेन प्रति यामचतुष्टय मर्दयित्वा शरावसम्पुटित विधाय घनतया सप्त मृत्तिका दत्त्वोत्पलकत्रयेण पुट दद्यात् । तत खल्वे निक्षिप्य त्रिकटुक्वाथेन यामचतुष्टय विमृद्य मुद्गपरिमिता वटी कुर्यात् । मधुमिश्रितम्रष्टजीरकचूर्णे एका वटीं सयोज्य सेवनात्सर्वे ज्वरास्तत्क्षण निवर्तन्ते । महाज्वरेषु त्रिरावृत्ता वटी योजनीया नाऽधिका । तिन्तिडी वर्ज्या । क्षीरान्न गोधूमखण्डयूषश्चाऽनुकूल । अपि चाऽन तमूलक्वाथेन वातज्वर, नागरक्वाथेन पित्तज्वर त्रिकटुकचूर्णमिश्रिताऽऽर्द्रकरसेन श्लेष्मज्वर , धान्यकक्वाथेन तापज्वर, दध्ना सङ्ग्रहण्यतीसारौ, भृङ्गराज ( गुण्टगलगरा ) रसेन ज्वरसञ्जातसर्वाङ्गशूलादया नश्यन्ति । नेत्राञ्जनमपि कर्तव्यम् । अतिसाराणा गिट्टिगेड्डुरस ( ऊर्ध्वे पलाण्डुसदृशकन्दो यस्य पत्राणि तालमूलासदृशानि बृहन्ति च भवन्ति इति केचिद्वदन्ति अन्येतु गृहाद्रकमाहु ), अण्डवाते लताकरञ्जपत्ररस , स्त्रीसम्भोगाय कामकस्तूरिका (मरुवक) पत्ररस , सर्वसन्निपातेषु धत्तूरपत्ररस , अजीर्णस्योष्णोदकम्, अर्शसा मूलकरस , श्वयथुपाण्डुकामलासु म्रष्टाऽतिविषाक्वाथ , दुष्टसर्पादिदशनस्य बीजपूररस , वृश्चिकविषस्य गोमयम्, निम्बबीजतैलं, मयूरपिच्छभस्म च । एवमनुपान यथोचित देयम् । सर्वविषाणामपि यत्र क्षतं तत्र मयूरपिच्छभस्मना सह निम्बबीजतैलमिश्रितेन क्षतस्थान लिम्पेत् । आर्द्रकरसेन नेत्रे अञ्जयित्वा यद्यधस्तात्पदयेपातालपर्यन्त दृष्टि प्रसरति । पिशाचग्रस्ताना कदलतिल्तैलेन मिश्रयित्वा नेत्राञ्जनं कृत चेद्भूतप्रेतपिशाचादय पलायन्ते । रक्तमूलार्शोव्याधेर्नवनीतेन सहाऽऽसने लेपनीयम् । वन्ध्यास्त्रीणा परिपक्वपटबीजचूर्णेन ऋतुकाले एकवारं दद्यात् । एवमृतुत्रये । सर्पवृश्चिकान्मत्तशुनकविषादौ पूर्वोक्ततैलेन सह क्षतस्थाने नियोजनीयम् । इत्येवमेवाऽनुपानभेदेन सर्वव्याधिषु नियोजनीयम् । शिवशक्तिपूजा कार्या ॥ (अगस्त्य०)

## ४१ ज्वराङ्कुशरसः ( द्वितीय ) २

शुद्धपारदगन्धकदरददङ्कणविषतालकजयपालत्रिकटुत्रिफलाश्चैतानि प्रत्येक सपादतोलकानि गृहीत्वा चूर्णीकृत्य भृङ्गराजरसेन यामचतुष्टय मर्दयित्वा मरिचप्रमाणा मात्रा कुर्यात् । कृष्णतुलसीरसेन बालकज्वराणा दातव्यम् । मरिचस्वल्केन वातशूला शीतज्वराश्च नश्यन्ति । चित्रकपिप्पलीमूलतिक्तपटोलभूनिम्बविष्णुक्रान्ताऽनन्तमूलयष्टिमधुकाऽऽकारकरभत्रिकटुत्रिफलाऽमृतासज्वरीफलतालीसपत्रोशीरश्वेतचन्दनाना क्वाथेन पुराणवातपित्तश्लेष्मद्वन्द्वाऽऽहिका जीर्णज्वरा नश्यन्ति । षाण्मासिकवयस्कमारभ्य त्रिहायणवय पर्यन्त बालानामेकवारमौषध मुद्गप्रमाण देयम् । तरुणादीना चणकप्रमाणम् । अम्लरसा वर्ज्य शीतलवातपदार्थाश्च । अस्मिन्नौषधे रसगन्धकादयो विधिना शोध्या । प्रसूतस्त्रीणा ज्वरादौ त्र्यहमध्ययनोपयोजनीयम् । पथ्य रोगोचितम् । (व्यास०)

## ४२ ज्वराङ्कुशरसः ( महदादि ) ३

शुद्धगन्धकपारदविषमल्लपातपुष्पधत्तूरबीजमरिचानि प्रत्येकतोल्कानि विचूर्ण्य कृष्णधत्तूरपत्रस्वरसेन यामचतुष्टय सम्यग्विमृद्य गुञ्जामात्रां वटी कृत्वाऽऽर्द्रकस्वरसेन सेविता चेद्विषमशीतकप्रधानज्वरा निवर्तन्ते । ब्रह्मक्षारमिश्रितपुराणतण्डुलं उष्णोदकञ्च पथ्यम् । सप्ताऽहमपाभ्य तरुणनारीना सर्वपाषाणगर्भितान्यौषधानि वर्ज्यानि । कदाचिन्महावायुकठिनदोषमहासन्निपातकण्ठगतकफवातादिदोषैराक्रान्ताश्चेत्तदा तेष्वपि प्रयोज्यानि (व्यास०)

## ४३ ज्वराङ्कुशरसः ( चतुर्थ )४

सम्यक् शुद्धमेकतोलक मल्लपाषाण पञ्चतोल्के गर्दभीक्षीरे चीनपात्रे मिश्रयित्वा द्वितोल्कहिङ्गुले ग्रासो देय । हिङ्गुल वद्धो भवति । अथ तण्डुलमात्रा मरिचक्वाथेन सह सेवितस्सर्वाज्वरानाशयति । अम्लरसा वर्ज्य । आढकीयूष , भिण्डिका, गोधूमखण्डयूष , शुष्क काकमाचा ( कामाता ) फल शिग्रुशिम्बी, क्षीरान्नञ्च पथ्यम् । अत्रयं सूचना=वितस्तिमात्रोच्छ्रिते मृत्पात्रेऽर्द्धभाग सिक्तया पूरयित्वा सिक्तामध्ये काचपात्र निधाय तन्मध्ये ददरङ्गल निक्षिप्य यथोक्तप्रकारेण ग्रासं दद्यादित्युपदेश्यम् । (व्यास०)

## ४४ तालकमात्रा

शुद्धपारदगन्धकमनःशिलाविषाणि दरदतालकहेममाक्षिकाभ्रकताम्रभस्मानि समानि विचूर्ण्य चाङ्गेरी ( पुलिचिन्ता ) जम्बीररसाभ्यामेकैकदिनं, अम्लदाडिमीफलचित्रकमूलत्वग्रसाभ्याञ्च द्विद्वियामं विमृद्य शुष्कां चक्रिकां शरावयोरवरुद्ध्य कुक्कुटपुटो देयः। एतद्गुञ्जामितं मधुमिश्रिताऽऽर्द्रकरसेन सेवितं सदुन्मादमदमूर्च्छादोषाशयति। पथ्यं यथोचितम्॥ ( व्यास० )

## ४५ तालसिन्दूरम्

पनतालकं, रक्तमनःशिला, गौरीपाषाणं, मल्लं, तुत्थं ( मैलतुत्तं ), अमलसारगन्धकं, हिङ्गुलः, पारदः, सव्वीरं, रसकर्पूरं, अभ्रदन्तपाषाणश्चैतानि खल्वे जम्बीररसेन दिनद्वयं मर्दयित्वा शुष्कीकृत्य कण्टकिपलाशशिग्रुरक्तकार्पासपार्श्वपिप्पलाऽर्ककुन्दनन्दिवर्धन ( अनन्त म० ) पुष्परसैः प्रत्येकं चतुर्विंशतितोलकैश्चैकत्रसम्मिलितैः स्तोकेन स्तोकेन रसेन मर्दयित्वा सर्वोऽपि रसः शोषणीयः। अन्ते शुष्कां चक्रिकां विधाय शरावसम्पुटितां कृत्वा गजपुटो देयः। स्वाङ्गशीतलं भृङ्गराजरसेन यामचतुष्टयं मर्दयित्वा पूर्ववत्पुटो देयः। पुनर्जम्बीररसेन पूर्ववत्पुटदानेनैतदत्यन्तरक्तवर्णं सिन्दूरं भवति। एतन्मुद्गप्रमाणं मधुमिश्रितत्रिकटुकचूर्णेन सह दत्तं चेद्साध्यशूलाः, एकविंशतिमेहास्तद्गन्ध्ययश्च, अष्टादशकुष्टानि, वातपवित्रगण्डमालाराजयक्ष्मगुल्मरोगादयः सङ्क्रामकव्याधिश्चैते सर्वे निर्मला भवन्ति। आढकी, पालवृन्ताकं, शिग्रुशिम्बी, क्षुद्रा, गोक्षीरं, उष्णोदकञ्चेति सर्वं पथ्यम्। अम्लधूमौ वर्ज्यौ। ( अगस्त्य० )

## ४६ त्रिकटुकगुटिका

गन्धकः, तालकं, आकारकरभः, सव्वीरं, विषं, रसकर्पूरं, गौरीपाषाणं, पारदः, जयपालबीजानि, त्रिकटुकं, त्रिफला, पिप्पलीमूलं, रास्ना, भार्ङ्गी, कटुरोहिणी, सैन्धवश्चैतेषु शोधनीयानि शोधयित्वा सर्वाणि सञ्चूर्ण्य भृङ्गजलेन सप्तदिनानि विमृद्य गुञ्जापरिमितां वटीं कृत्वा छायायां विशोष्य सुनिम्बकषायेण सर्वज्वरेषु देयम्। जम्बीररसेन विषोपविषाणि, भृङ्गाद्भिः श्वयथुपाण्डुकामलावातपित्तमेहपिडिकादयः, आमलककाथेन सर्वाङ्गशूलाः, महिषीदध्नाऽतिसाराः, किञ्चिद्गद्ध्दर्जीरकेण गुल्माः, मधुना गर्भवातादयः, अम्लदाडिमीफलरसेन पित्तशूलवमनाऽरोचकभ्रम्याद्यो नश्यन्ति। वातपदार्थवर्ज्यं पथ्यम्। ( व्यास० )

## ४७ त्रिनेत्रसिक्थकम्

शुद्धपारदजयपालबीजनारिकेलकपालभस्मप्राचीनतालगुडानेकैकतोलकान् गृहीत्वा नारिकेलदुग्धेन यामद्वयं विमृद्य सिक्थलर्थं विधाय रजतसम्पुटे स्थापयेत्। एतत्कण्टकितजिह्विकायां किञ्चिन्मात्रं घर्षणीयम्। कण्टकनीलिमादिदोषो निवर्तते। वमनहिक्के, ऊर्ध्वश्वासः, इन्द्रियस्तन्धता, अङ्गशैथिल्यं, चित्तविभ्रमः, सुखसन्निपातज्वरः ( स्त्रीसङ्गोत्पन्नः, यत्सकाशादुत्पन्नो ज्वरस्तत्स्त्रीजघनप्रदेशाद्रकमानीयाऽञ्जने कृते तच्छान्तिर्भवतीति दक्षिणदेशप्रसिद्धिः) एते नश्यन्ति। अथ सन्निपाते नस्यम्–क्षुद्रव्याघ्री (उस्तिवेरलु), द्रोणपुष्पीमूलं (तुम्मीवेरलु), पूतिकरञ्जपिण्याकञ्च समभागमञ्जनवद्विमृद्य नारिकेलपुटके संस्थाप्य नस्यं देयम्। सुखसन्निपातो नश्यति। मत्कुणरुधिरमञ्जने देयम्। ( व्यास० )

## ४८ धातुवृद्धिरसायनम्

भूमिकूष्माण्डं ( भूचक्रकन्दम् ), कृष्णमुशली, मुञ्जातकं ( सालिमं ), त्वक्, लवङ्गं, पलाबीजानि, कोकिलाक्षः ( नीरुगुब्बी ), रजतभस्म, जातीफलं, जातिपत्री, ईसबगोलः ( ईसबगोलु ), सुवर्णभस्म प्रत्येकं पादतोलकानि चूर्णयित्वा समभागां शर्करां संयोज्य लेहपाकं विधाय प्रातः सायञ्च पादतोलकं सेवनीयम्। उपरिष्टाद्दशतोलकं गोक्षीरं पेयम्। वृद्धोऽपि तरुणायते। ( अगस्त्य० )

## ४९ धातुवृद्धिलेहम्

भूकूष्माण्डकन्दं, पुष्करकन्दं, त्रिकटुकं, यष्टिमधुकं, कतकबीजं, अश्वगन्धा, भद्रमुस्ता, तक्कोलं, त्वक्, जीरकं, एलाबीजं, मस्तगी, कासनीबीजं, नागकेशरं, भार्ङ्गी, जातीफलं, जातीपत्रं, अतिविषा, मुञ्जातकं, मुशलीकन्दं, मञ्जिष्ठा, उशीरमूलं, देवदारु, शतपुष्पा, चव्यं, क्षुद्रहरीतकी, कुटजः, तक्कोलम् ( सलवमिर्यालु), कुमुदकन्दं, ज्योतिष्मतीबीजं, पद्मबीजं, मदनकामेश्वरपुष्पं, अहिफेनं, महाराष्ट्री (मराठी मोग्गा), कपिकच्छुमूलकलशुनशरहञ्चिकाकृष्णतुलसीबीजानि केशरं, चन्द्रसारः, रोचना चेत्यन्तिमत्रयं प्रत्येकमर्धतोलकं, अवशिष्टानि प्रत्येकं सार्धतोलकानि गृहीत्वा चूर्णीकृत्य सितोपलातालीशर्करावातामानि प्रत्येकं १२॥ पलिकानि, आक्षोटं, प्रियाल (सारपप्पु) श्चेति ४-४ पलं ग्राह्यम्। अथ लेह्यपाकविधिः—षण्णवतितोलकं गोक्षीरं शर्कराद्वयस्य चूर्णञ्च भाण्डे निधाय वातामादित्रयं घृतपकमहिफेनञ्च क्षिप्त्वा तन्तुलीं विधाय पूर्वोक्तसर्वद्रव्याणां चूर्णं मेलयित्वा १५ पलं गोघृतं, २४ तोलकं मधु च निक्षिप्य लेहं कृत्वा

